## (४) अथ परिभाषाः।

१ व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्। २ यथोद्देशं संज्ञापरिभाषम्। ३ कार्यकालं संज्ञापरिभाषम्। ४ अनेकान्ता अनुबन्धाः। ५ एकान्ताः। ६ नानुबन्धकृतमनेकाल्त्वम्। ७ नानुबन्धकृतमनेजन्तत्वम्। ८ नानुबन्धकृतमसारूप्यम्। ९ कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः। १० उभयगतिरिह भवति। ११ कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते। १२ यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते। १३ निर्दिश्यमानस्यादेशा भवन्ति। १४ यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः। १५ अर्थवद्ग्रहणे नानर्थकस्य। १६ गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः। १७ अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति। १८ एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः। १९ एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्तते। २० भाव्यमानेन सवर्णानां ग्रहणं न। २१ भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति। २२ वर्णाश्रये नास्ति प्रत्ययलक्षणम्। २३ उणादयोऽव्युत्पन्नानि प्रातिपदिकानि। २४ प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्। २५ प्रत्ययग्रहणे चापञ्चम्याः। २६ उत्तरपदाधिकारे प्रत्ययग्रहणेन तदन्तग्रहणम्। २७ स्त्रीप्रत्यये चानुपर्जनेन। २८ संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति। २९ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्। ३० पदान्ताधिकारे तस्य च तदन्तस्य च। ३१ व्यपदेशिवदेकस्मिन्। ३२ ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति। ३३ व्यपदेशिवद्भावोऽप्रातिपदिकेन। ३४ यस्मिन् विधिस्तदादावल्ग्रहणे। ३५ सर्वे विधयश्छन्दसि विकल्प्यन्ते। ३६ सर्वो द्वन्द्वो विभाषैकवद् भवति। ३७ प्रकृतिवदनुकरणं भवति। ३८ एकदेशविकृतमनन्यवत्। ३९ पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः। ४० सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव। ४१ पुनः प्रसङ्गविज्ञानात् सिद्धम्। ४२ विकरणेभ्यो नियमो बलीयान्। ४३ कृताकृतप्रसङ्गि नित्यम्। ४४ शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति। ४५ असिद्धं बहिरङ्गमन्तरङ्गे। ४६ नाजानन्तर्ये बहिष्ट्वप्रकॢप्तिः। ४७ अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते। ४८ अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते। ४९ वार्णादाङ्गं बलीयः। ५० अकृतव्यूहाः पाणिनीयाः। ५१ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति। ५२ क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते। ५३ पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्। ५४ मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्। ५५ अनन्तरस्य विधिर्वा प्रतिषेधो वा। ५६ पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः। ५७ ताच्छीलिकेषु वासरूपविधिर्नास्ति। ५८ क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति। ५९ लादेशेषु वासरूपविधिर्नास्ति। ६० उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्। ६१ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्। ६२ गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः। ६३ साम्प्रतिकाभावे भूतपूर्वगतिः। ६४ बहुव्रीहौ तद्गुणसंविज्ञानमपि। ६५ चानुकृष्टं नोत्तरत्र। ६६ स्वरविधौ व्यञ्जनमविद्यमानवत्। ६७ निरनुबन्धकग्रहणे न सानुबन्धकस्य। ६८ क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते। ६९ समासान्तविधिरनित्यः। ७० सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य। ७१ सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः। ७२ तन्मध्यपतितस्तद्ग्रहणेन गृह्यते। ७३ लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य। ७४ अङ्गवृत्तेपुनर्वृत्तावविधिः। ७५ संज्ञापूर्वको विधिरनित्यः। ७६ आगमशास्त्रमनित्यम्। ७७ गणकार्यमनित्यम्। ७८ अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्। ७९ सर्वविधिभ्यो, लोपविधिरिड्विधिश्च बलवान्। ८० प्रकृतिग्रहणे

यङ्लुगन्तस्यापि ग्रहणम्। ८१ उपपदविभक्तेः कारकविभक्तिर्बलीयसी। ८२ अनन्त्यविकारे अन्त्यसदेशस्य। ८३ नानर्थके ऽलोऽन्त्यविधिरनभ्यासविकारे। ८४ विधिनियमसम्भवे विधिरेव ज्यायान्। ८५ सामान्यातिदेशे विशेषानतिदेशः। ८६ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्। ८७ गामादाग्रहणेष्वविशेषः। ८८ पर्जन्यवल्लक्षणप्रवृत्तिः। ८९ लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते। ९० अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति। ९१ ज्ञापकसिद्धं न सर्वत्र। ९२ पूर्वत्रासिद्धीयमद्वित्वे। ९३ क्वचिद् विकृतिः प्रकृतिं गृह्णाति।

९४ श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च।
यत्रैकाज्ग्रहणञ्चैव पञ्चैतानि न यङ्लुकि। १॥

९५ अर्द्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणा इति।

THE END.

# शुद्धिपत्रम्।

The official duties compelled the editor to be at Rajshahi while the book was printed at Calcutta. So, to his great regret, some misprints as noticed below have disfigured the book. The readers are to kindly correct them and the errors of other kinds where observed :—

## (1) IN THE TEXT.

| पृष्ठायाम् | पङ्क्तौ | अशुद्धं | शुद्धम् |
|---|---|---|---|
| १५ | २५ | देवदत्ता वा | दैवदत्ता वा |
| ४३ | ९ | धानुष्व | धानुष्क |
| ९९ | २ | रखिक | रथिक |
| १४८ | २४ | जंकाम | कामज् |
| १८८ | १५ | लुनीत्येवं | लुनीतेत्येवं |
| २३४ | ४ | माहेन्द्रम्। | माहेन्द्रम्। महेन्द्रियम्। |
| २७५ | २१ | ठन्नपि। स्वगणिका। | छन्नपि। स्वगणिकौ। |
| ३३८ | ९ | आति | आतिः |
| ३५२ | ८ | अम्वादयः | आमादयः |
| ३६८ | १३ | धान्याद्युक्षेपण | धान्याद्युत्क्षेपण |
| ३७५ | १६ | ईछते | ईर्ष्यते |
| ४२५ | २१ | अह्निवती | अह्नीवती |
| ४३३ | ५ | प्रस्यन्द | प्रस्यन्द्य |
| ४३७ | २२ | गागङ्गादिश्च | गा-गाङ्गादिश्च |
| ४७१ | १ | इटीत्येवावत् | इटीत्येव |
| ,, | ३ | ऊर्णोतिर्विषा | ऊर्णोतिर्विभाषा |
| ४९३ | २२ | आयथापुर्य्य | आयथापुर्य्यम् |
| ५०२ | २ | जागरक | जागरकः |
| ५१२ | ११ | हिंसायायाम् | हिंसायाम् |

## (2) IN NOTES.

| | | | |
|---|---|---|---|
| २१ | २३ | स्वरतोऽपराधिफल | स्वरतोऽपगाधफल |
| ५६ | २५ | लोप | लोपः |
| १६१ | २४ | विदत, जनाविदित | विदित, जनविदित |
| २०० | २४ | व्रिव्रिग्रेते | विव्रियेते |
| २०५ | २५ | बौद्धेः | बौद्धैः |

| पृष्ठायाम् | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २१४ | २६. | विद्याधराङ्गनेत्यमरः | विद्याधराङ्गनेति शब्दार्णवे ।<br>तथा विद्येषाख्यद्गना भौरित्यमरः । |
| २९६ | २३ | मेषराश | मेषराशौ रवौ |
| ३९६ | २७ | छीतद्यः | छीतृद्यः |
| ५४० | २३ | एत, मादृशः | भव, मादृशः |

## (3) IN INTRODUCTION.

| | | | |
|---|---|---|---|
| १ | २ | स्फटम् | स्फुटम् । |
| १३ | १० | assers | asserts |
| १५ | २२ | निदृशात् | निर्दृशात् |